पुरुषतन्त्रक्रियासाध्यत्वात् । एवं ब्रह्मज्ञानं निरूपितम् । ब्रह्म तु प्रतिपाद्यं साक्षात्कर्तव्यं प्राप्यं चैकजीववादे निर्विशेषम्, अनेकजीववादे तु श्रीभाष्यमत इव प्राप्यं परं सविशेषेश्वरस्वरूपमेव । इयान् विशेषः—यत् श्रीभाष्यमते—जीवस्य मुक्त्यवस्थायामपि शरीरतया स्वरूपतोऽवस्थितिर्जगद्व्यापारवर्जं तत्सारूप्यादिकमिति पदार्थत्रयसत्यता, अद्वैतमते तु जीवस्येश्वरभाव एवेति न पृथक्स्वरूपमिति पदार्थद्वयसत्यता । अत एव जगत्कारणत्वस्य तटस्थलक्षणतया निर्देशः, सर्वमुक्तौ निर्विशेषब्रह्मभावेऽपि स सम्भवीति सत्यं ज्ञानमित्यादिस्वरूपलक्षणनिर्देशश्चोपपद्यत इति वादद्वयेऽपि ज्ञेयस्य ब्रह्मणो निर्विशेषत्वं समानमेव, प्राप्यस्वरूप एव परं पृथभेद इति फलितम् । निर्विशेषत्वं चाविद्याद्युपाधिधर्मापरवशत्वमविद्योपहित वृत्त्युपहितशुद्धादिसाधारणमेव । उपहितमेव वेदान्तगम्यं नतु शुद्धमिति भामतीसिद्धान्तोऽप्यनेकजीववादप्रतिकर्मव्यवस्थाद्यभिप्राय एव, नैकजीववादाद्यभिप्रायः । तत्र हि मुख्यजीवसाक्षात्कारानन्तरं मूलाज्ञानविनाशात् न शुद्धस्वरूपविघात इत्यादिकमन्यत्र व्यक्तम् ।

अत्राद्वैतमतसाधकतया आकरसम्मतानि वेदान्तवाक्यादीनीमान्येव—(१) "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" (२) अथ परा यया तदक्षरमधिगम्यते तत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" (५) यस्यामतं तस्य मतं मतं यस्य न वेद नः । अविज्ञातं विजानतां विज्ञातमविजानताम्" (६) "न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः" (७) "आनन्दो ब्रह्म" (८) "इदं सर्वं यदयमात्मा" (९) "नेह नानास्ति किंचन । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" (१०) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् ? केन कं विजानीयात्" (११) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (१२) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" (१३) "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (१४) मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादीनि ।

यत्तु-श्रीभाष्ये—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुखेन—सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्य-

धर्मभूतज्ञानसंकोचविकासोत्पत्त्यादिकमेव ज्ञानोत्पत्त्यादिकमेवमद्वैतमतेऽपि वृत्तिगुणजन्यताद्यभिप्रायमेव ज्ञानानित्यताव्यवहरणमपीति ज्ञानाश्रयत्वमात्मनः ब्रह्मणो वाऽन्तःकरणवृत्त्याद्युपाधिसम्बन्धाधीनमेव, न स्वतः। अत एव—आनन्दो ब्रह्मेति श्रुत्या आनन्दादिविशिष्टत्वं यदभिमन्यते, तदिदं—"प्रज्ञानमानन्दं ब्रह्मेति वाक्ये प्रज्ञानपदवैयर्थ्यात् न स्वरसम्। अत एव—"न दृष्टेर्द्रष्टारं पश्ये"रिति दृष्ट्यति-रिक्तद्रष्टृनिषेध उपपद्यते। श्रीभाष्यमते हि—यत्रागन्तुकचैतन्ययोगनिषेध उक्ता-वाक्यार्थः, तत्र लक्षणाध्याहारक्लेशस्सर्वविदित एव। तथाच ब्रह्मेतरसर्वपदार्थ-मिथ्यात्वे एव वेदान्तानां तात्पर्यम्। अत एव हि—"नेह नानास्ति किंचने"ति भेदनिषेध उपपद्यते। शरीरशरीरित्वेतु तत्र भेदव्यपदेशोऽप्रसक्त एव। कल्पिता-धिष्ठानयोस्तु अधिष्ठान आरोप्यभेदस्य प्रतीत्या स प्रसक्त इति तन्निषेधस्सुतरां सार्थक इत्यद्वैतमत एव भेदनिन्दाश्रुतीनां सार्थक्यम्। अत एव—"यदा ह्येवैष एतस्मि-न्नुदरमन्तरं कुरुते" इति वाक्यम्—व्याख्यातम्; अस्यापि ब्रह्मणि एतस्मिञ्छब्द-परामृष्टे भेदनिन्दापरत्वात्। श्रीभाष्यमतरीत्या पूर्ववाक्यप्रस्तुतप्रतिष्ठाविच्छेद-निन्दापरत्वे तु "यदाह्येवैषेति वाक्ये एतस्मिन्निति स्थाने एतस्यामिति स्त्रीलिङ्ग-निर्देशस्समापद्येत। अत एव—मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति स्वाप्नप्रपञ्चस्य मायामयत्वं प्रतिपादितमुपपद्यते। अधिकं चात्र वक्तव्यं भूमिकायां व्यक्तम्। एतेन—न स्थानतोऽपीति सूत्रमपि—व्याख्यातम्। तदपि हि भूमिकायां सम्यगेव समालोचितम्। अपराण्यपि—दूषणानि श्रीभाष्यकारैर-द्वैतसिद्धान्ते संपादितानि भूमिकायां सम्यगेव समालोचितानीति प्रत्यग्ब्रह्मैक्य-मेव शास्त्रार्थः। तदुपपादनार्थमेव सर्वेषां वेदान्तानां प्रवृत्तिः। तत्र निर्गुण-वाक्यानां साक्षात् सगुणकर्मवाक्यानां तु परम्परयोपयोगः। तादृशं च ब्रह्म प्रपञ्चाभावोपलक्षितमेवौपनिषदमिति प्रपञ्चाभावज्ञानजननार्थमनुपलब्धि-परिच्छेदस्यार्थापत्तिपरिच्छेदस्यानुमानपरिच्छेदस्य चोपयोगः। आगमपरि-च्छेदस्य तु साक्षात् ब्रह्मप्रतिपादनेनोपयोग इति ब्रह्मैव तत्प्रमाणान्यपि प्रत्यक्षानुमानोपमानार्थापत्त्यागमानुपलब्धिरूपाणि सम्यगत्र समालोचितानि। तथाच तत्र "प्रत्यक्षप्रमा तु चैतन्यमेवे"ति उपक्रमे चैतन्यरूपेणोपसंहारे अखण्डा-नन्दरूपेण च विविचितं ब्रह्मैकं चेदपि यावदखण्डानन्दात्मस्फुरणं चैतन्यरूपेण सद्रूपेण च ब्रह्मज्ञानदशायामेव प्रत्यक्षादिप्रमाणप्रवृत्तिः; अखण्डा-